पं सवनसोमन्तोन्नयनजातकर्म्म नामकरणान्नप्राशनचौड़ोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्म्मचारिणीसंयोगः पञ्चानां यज्ञानामानुष्ठानं देव-पितृ मनुष्य भूत ब्रह्मणामेतेषाञ्चाष्टका-पार्वणश्राद्धश्रावण्याग्रहायणीचैत्राश्वयुजीति सप्त पाकयज्ञसंस्था अग्न्याधेयमग्निहोत्रदर्शपौर्णमासावग्रहणं चातुर्म्मास्यनिरूढ़पशु-बन्धसौत्रामणीति सप्त हविर्यज्ञसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोड़शि वाजपेयोऽतिरात्रोऽप्तोर्य्याम इति सप्त सोम-संस्था इत्येते चत्वारिंशत् संस्काराः। अथाष्टावात्मगुणाः दया सर्व्वभूतेषु क्षान्तिरनसूया। शौचमनायासो मङ्गलमकार्पण्यम-स्पृहेति यस्यैते न चत्वारिंशत् संस्कारा न चाष्टावात्मगुणा न स ब्राह्मणः सायुज्यं सालोक्यञ्च गच्छति। यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणा अथ स ब्रह्मणः सायुज्यं सालोक्यञ्च गच्छति गच्छति।

इति गौतमीये धर्म्मशास्त्रे अष्टमोऽध्यायः॥ ८॥

---

## नवमोऽध्यायः।

स विधिपूर्व्वं स्नात्वा भार्य्यामभिगम्य यथोक्तान् गृहस्थ-धर्म्मान् प्रयुञ्जान इमानि व्रतान्यनुकर्षेत्। स्नातको नित्यं शुचिः सुगन्धः स्नानशीलः सति विभवे न जीर्णमलवद्वासाः स्यान्न रक्तमलवदन्यधृतं वा वासो बिभृयान्न स्रगुपानहौ निर्णिक्तम-शक्तौ न रूढ़श्मश्रुरकस्मान्नाग्निमपञ्च युगपद्धारयेन्नाञ्जलिना पिबेन्न तिष्ठन्नुद्धृतोदकेनाचामेन्न शूद्राशुच्येकपाण्यावर्ज्जितेन न वाय्वग्निविप्रादित्यापो देवता गाश्च प्रतिपश्यन् वा मूत्रपुरीषा-

मेध्यान्युदस्येव देवताः प्रति पादौ प्रसारयेन्न पर्णलोष्टाश्मभि-
र्मूत्रपुरीषापाकर्षणं कुर्य्यान्न भस्मकेशतुषकपालास्थ्यधितिष्ठेन्न
म्लेच्छाशुच्यधार्म्मिकैः सह सम्भाषेत सम्भाष्य, पुण्यकृतो मनसा
ध्यायेद्ब्राह्मणेन वा सह सम्भाषेत। अधेनुं धेनुभव्येति
ब्रूयादभद्रं भद्रमिति कपालं भगालमिति मणिधनुरितीन्द्र-
धनुः। गां धयन्तीं परस्मै नाचक्षीत न चैनां वारयेन्न मिथुनी-
भूत्वा शौचं प्रति विलम्बेत न च तस्मिन् शयने स्वाध्यायम-
धीयीत नचापररात्रमधीत्य पुनः प्रतिसंविशेन्नाकल्पां नारी-
मभिरमयेन्न रजस्वलां न चैनां श्लिष्येन्न कन्यामग्निमुखोपधमन-
विगृह्यवाद--बहिर्गन्धमाल्य--धारण-पापीयसावलेखनभार्य्यासह-
भोजनाञ्जन्त्यवेक्षणाकुद्वारप्रवेशनपादधावनासन्दिस्थभोजन-न-
दीबाहुतरण वृक्षविषमारोहणावरोहणप्राणव्यवस्थानानि च
वर्ज्जयेन्न सन्दिग्धां नावमधिरोहेत्। सर्वत एवात्मानं गोपायेन्न
प्रावृत्य शिरोऽहनि पर्य्यटेत् प्रावृत्य तु रात्रौ। मूत्रोच्चारे च न
भूमावनन्तर्द्धाय नाराच्चावसथान्न भस्मकरीषकृष्टच्छायापथि-
काम्येषु उभे मूत्रपुरीषे दिवा कुर्य्यादुदङ्मुखः सन्ध्ययोश्च रात्रौ
तु दक्षिणामुखः पालाशमासनं पादुके दन्तधावनमिति वर्ज्जयेत्।
सोपानत्कश्चाशनासनशयनाभिवादननमस्कारान् वर्ज्जयेत्। न
पूर्वाह्णमध्यन्दिनापराह्णानफलान् कुर्य्याद्यथाशक्ति धर्म्मार्थ-
कामेभ्यस्तेषु च धर्म्मोत्तरः स्यान्न नग्नां परयोषितमीक्षेत न पदा-
सनमाकर्षेन्न शिश्नोदरपाणिपादवाक्चक्षुश्चापलानि कुर्य्याच्छेदन
भेदनविलेखनविमर्द्दनावस्फोटनानि नाकस्मात् कुर्य्यान्नोपरि
वत्सतन्त्रीं गच्छेन्न कुलङ्कुलः स्यान्न यज्ञमवृतो गच्छेद्दर्शनाय
तु कामं न भक्ष्यानुत्सङ्गे भक्षयेन्न रात्रौ प्रेष्याहृतमुद्धृतस्नेह-

तिलपनपिण्याकमथितप्रभृतीनि चातुर्वर्ण्याणि नाश्नीयात्। सायं प्रातस्त्वन्नमभिपूजितमनिन्दन् भुञ्जीत न कदाचिद्रात्रौ नग्नः स्वपेत् स्नायाद्वा। यच्चात्मवन्तो वृद्धाः सम्यग्विनीता दम्भलोभमोहवियुक्ता वेदविद आचक्षते तत् समाचरेद्योगक्षेमार्थमीश्वरमधिगच्छेन्नान्यमन्यत्र देवगुरुधार्म्मिकेभ्यः प्रभूतैधोदकयवसकुशमाल्योपनिष्क्रमणमार्य्यजनभूयिष्ठमनलससमृद्धं धार्म्मिकाधिष्ठितं निकेतनमावसितुं यतेत। प्रशस्तमङ्गल्यदेवतायतनचतुष्पथादीन् प्रदक्षिणमावर्त्तेत। मनसा वा तत्समग्रमाचारमनुपालयेदापत्कल्पः। सत्यधर्म्मा आर्य्यवृत्तः शिष्टाध्यापकशौचशिष्टः श्रुतिनिरतः स्यान्नित्यमहिंस्रो मृदुः दृढ़कारो दमदानशील एवमाचारो मातापितरौ पूर्वापरान् सम्बन्धान् दुरितेभ्यो मोक्षयिष्यन् स्नातकः शश्वद्ब्रह्मलोकान्न च्यवते न च्यवते।

इति गौतमीये धर्म्मशास्त्रे नवमोऽध्यायः॥ ९॥

---

## दशमोऽध्यायः।

द्विजातीनामध्ययनमिज्या दानं ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः पूर्वेषु नियमस्त्वाचार्य्यज्ञातिप्रियगुरुधनविद्याविनिमयेषु ब्रह्मणः सम्प्रदानमन्यत्र यथोक्तात् कृषिवाणिज्ये चास्वयंकृते कुसीदञ्च। राज्ञोऽधिकं रक्षणं सर्वभूतानां न्याय्यदण्डत्वं बिभृयाद् ब्राह्मणान् श्रोत्रियान् निरुत्साहांश्चाब्राह्मणानकरांश्चापकुर्वाणांश्च योगश्च विजये भये विशेषेण चर्य्या च रथधनुर्भ्यां संग्रामे संस्थानमनिवृत्तिश्च न दोषो हिंसायामाहवेऽन्यत्र व्यश्वसारथ्यायुधकृताञ्जलिप्रकीर्णकेश-पराङ्मुखोपविष्ट-

स्थल-वृक्षारूढ़-दूतगोब्राह्मण-वादिभ्यः क्षत्रियश्चेदन्यस्तमुपजीवेत्
तद्वृत्तिः स्यात् जेता लभेत सांग्रामिकं वित्तं वाहनन्तु राज्ञ
उद्धारश्चापृथग्जयेऽन्यत् तु यथार्हं भाजयेद्राजा राज्ञे बलिदानं
कर्षकैर्दशममष्टमं षष्ठं वा पशुहिरण्ययोरप्येके पञ्चाशद्भागात्
विंशतिभागः शुल्कः पण्ये मूलफलपुष्पौषधमधुमांसतृणेन्धनानां
षष्ठं तद्रक्षणधर्म्मित्वात् तेषु तु नित्ययुक्तः स्यादधिकेन वृत्तिः
शिल्पिनो मासि मास्येकैकं कर्म कुर्य्युरेतेनात्मोपजीविनो
व्याख्याता नौचक्रीवन्तश्च भक्तं तेभ्यो दद्यात् पण्यं वणिग्भिर-
र्घापचये न देयं प्रनष्टमस्वामिकमधिगम्य राज्ञे प्रब्रूयुर्विख्याप्य
संवत्सरं राज्ञा रक्ष्यमूर्द्ध्वमधिगन्तुश्चतुर्थं राज्ञः शेषः स्वामी
रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं
क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोर्निध्यधिगमो राजधनं न
ब्राह्मणस्याभिरूपस्याब्राह्मणो व्याख्यातः षष्ठं लभेतेत्येके चौरहृ-
तमुपजित्य यथास्थानं गमयेत् कोशाद्वा दद्याद्रक्ष्यं बालधनमा-
व्यवहारप्रापणात् समावृत्तेर्वा । वैश्यस्याधिकं कृषिवणिक्पाशु-
पाल्यकुसीदम् । शूद्रश्चतुर्थो वर्ण एकजातिस्तस्यापि सत्यम-
क्रोधः शौचमाचमनार्थे पाणिपादप्रक्षालनमेवैके श्राद्धकर्म्म
भृत्यभरणं स्वदारवृत्तिः परिचर्य्या चोत्तरेषां तेभ्यो वृत्तिं लिप्सेत
जीर्णान्युपानच्छत्रवासःकूर्चान्युच्छिष्टाशनं शिल्पवृत्तिश्च यञ्चार्यमा-
श्रितो भर्त्तव्यस्तेन क्षीणोऽपि तेन चोत्तरस्तदर्थोऽस्य निचयः
स्यादनुज्ञातोऽस्य नमस्कारो मन्त्रः पाकयज्ञैः स्वयं यजेतेत्येके ।
सर्वे चोत्तरोत्तरं परिचरेयुरार्य्यानार्य्यव्यतिक्षेपे कर्म्मणः साम्यं
साम्यम् ।

इति गौतमीये धर्मशास्त्रे दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः।

राजा सर्व्वस्येष्टे ब्राह्मणवर्ज्जं, साधुकारी स्यात् साधुवादी त्रय्यामान्वीक्षिक्याञ्चाभिविनीतः शुचिर्जितेन्द्रियो गुणवत्सहायोऽपायसम्पन्नः समः प्रजासु स्याद्धितञ्चासां कुर्वीत। तमुपर्य्यासीनमधस्था उपासीरन्नन्ये ब्राह्मणेभ्यस्तेऽप्येनं मन्येरन्। वर्णानाश्रमांश्च न्यायतोऽभिरक्षेच्चलतश्चैनान् स्वधर्म्मे स्थापयेद्धर्म्मस्यो ह्यंशभागभवतीति विज्ञायते। ब्राह्मणञ्च पुरो दधीत विद्याभिजन-वाग्रूपवयःशीलसम्पन्नं न्यायवृत्तं तपस्विनं, तत्प्रसूतः कर्म्माणि कुर्वीत। ब्रह्मप्रसूतं हि क्षत्रमृध्यते न व्यथत इति च विज्ञायते। यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याश्रयेत, तदधीनमपि ह्येके योगक्षेमं प्रतिजानते। शान्तिपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषिणां सम्वननमभिचारद्विषद्व्याधिसंयुक्तानि च शालाग्नौ कुर्य्याद्यथोक्तमृत्विजोऽन्यानि तस्य व्यवहारो वेदो धर्म्मशास्त्राण्यङ्गान्युपवेदाः पुराणं देशजातिकुलधर्म्माश्चाम्नायैरविरुद्धाः प्रमाणं। कृषिवणिक्पाशुपाल्यकुसीदकारवः स्वे स्वे वर्गे। तेभ्यो यथाधिकारमर्थान् प्रत्यवहृत्य धर्म्मव्यवस्थान्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्यूह्य यथास्थानं गमयेद्विप्रतिपत्तौ त्रयीविद्यावृद्धेभ्यः प्रत्यवहृत्य निष्ठां गमयेत्तथा ह्यस्य निःश्रेयसं भवति। ब्रह्म क्षत्रेण सम्पृक्तं देवपितृमनुष्यान् धारयतीति विज्ञायते। दण्डो दमनादित्याहुस्तेनादान्तान् दमयेद्वर्णाश्रमाश्च स्वकर्म्मनिष्ठाः प्रेत्य कर्म्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो

जन्म प्रतिपद्यन्ते विप्राश्च। विपरीता नश्यन्ति। तानाचार्य्योप-देशोदण्डश्च पालयते तस्माद्राजाचार्य्यावनिन्द्यावनिन्द्यौ।

इति गौतमीये धर्मशास्त्रे एकादशोऽध्यायः। ११

---

## द्वादशोऽध्यायः।

शूद्रो द्विजातीनभिसन्धायाभिऽहत्य च वाग्दण्डपारुष्या-भ्यामङ्गं मोच्यो येनोपहन्यादार्य्यस्त्र्यभिगमने लिङ्गोद्धारः। स्वहरणञ्च गोप्ता चेद्वधोऽधिकोऽथास्य। वेदमुपशृण्वतस्त्र-पुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीर-भेद आसनशयनवाक्पथिषु समप्रेप्सुर्दण्ड्यः शतम्। क्षत्रियो ब्राह्मणाक्रोशे दण्डपारुष्ये द्विगुणमध्यर्द्धं, वैश्यो ब्राह्मणस्तु क्षत्रिये पञ्चाशत्तदर्द्धं, वैश्ये न शूद्रे किञ्चित् ब्राह्मणराजन्यवत् क्षत्रियवैश्यावष्टापाद्यं। स्तेयकिल्विषं शूद्रस्य द्विगुणोत्तराणी-तरेषां प्रतिवर्णं विदुषोऽतिक्रमे दण्डभूयस्त्वं। फलहरितधान्य-शाकादाने पञ्चकृष्णलमल्पे। पशुपीडिते स्वामिदोष, पालसं-युक्ते तु तस्मिन्। पथि चैवेऽनावृते पालक्षेत्रिकयोः। पञ्च माषा गवि षड़ुष्ट्रे खरेऽश्वमहिष्योर्द्दशाजाविषु द्वौ द्वौ सर्व्वविनाशे शतं, शिष्टाकरणे प्रतिषिद्धसेवायाञ्च, नित्यं चैलपिण्डादूर्द्ध्वं स्वहरणञ्च। गोऽग्न्यर्थे तृणमेधान् वीरुद्वनस्पतीनाञ्च पुष्पाणि स्ववदाददीत फलानि चापरिवृतानाम्। कुसीदवृद्धिर्धर्म्म्या विंशतिः, पञ्च-माषकी मासं नातिसांवत्सरीमेके, चिरस्थाने द्वैगुण्यं प्रयोगस्य। भुक्ताधिर्न वर्द्धते दित्सतोऽवरुद्धस्य च। चक्रकालवृद्धिः कारिता-कायिकाशिखाधिभोगाश्च कुसीदं। पशूपजलोमक्षेत्रशतवाह्येषु

·गातिपञ्चगुणम। जड़ापोगण्डधनं दशवर्षभुक्तं परैः सन्निधौ भोक्तु-रश्रोत्रियप्रव्रजितराजन्यधर्म्मपुरुषैः। पशुभूमिस्त्रीणामनतिभोग ऋक्थभाजि ऋणं प्रतिकुर्य्युः, प्रातिभाव्यवणिक्शुल्कमद्यद्युत-दण्डान् पुत्रानध्याभवेयुर्निध्यन्वादियाचितावक्रीताधेया नष्टाः सर्व्वा न निन्दिता न पुरुषापराधेन। स्तेनः प्रकीर्णकेशो मुषली राजानमियात् कर्म्माचक्षाणः पूतो वधमोक्षाभ्यामघ्नन्नेनस्वी राजा। न शारीरो ब्राह्मणदण्डः कर्म्मवियोगविख्यापनविवा-सनाङ्ककरणान्यप्रवृत्तौ प्रायश्चित्ती स चौरसमः सचिवो मति-पूर्व्वं प्रतिग्रहीताप्यधर्म्मसंयुक्ते। पुरुषशक्त्यपराधानुबन्धविज्ञा-नाद्दण्डनियोगोऽनुज्ञानं वा वेदवित् समवायवचनाद् वेदवित्-समवायवचनात्।

इति गौतमीये धर्म्मशास्त्रे द्वादशोऽध्यायः॥ १२॥

---

## त्रयोदशोऽध्यायः।

विप्रतिपत्तौ साक्षिणि मिथ्यासत्यव्यवस्था बहवः स्युर-निन्दिताः स्वकर्म्मसु प्रात्ययिका राज्ञाञ्च निष्प्रीत्यनभिता-पाश्चान्यतरस्मिन्नपि शूद्रा। ब्राह्मणस्त्वब्राह्मणवचनादनुरोध्यो-ऽनिबन्धाश्चेन्नासमविताः पृष्टाः प्रब्रूयुरवचने च दोषिणः स्युः स्वर्गः सत्यवचने विपर्य्यये नरकः। अनिबन्धैरपि वैक्तव्यं पीड़ाकृते निबन्धः प्रमत्तोक्ते च साक्षिसभ्यराजकर्त्तृषु दोषो धर्म्मतन्त्र-पीड़ायां। शपथेनैके सत्यकर्म्मणा तद्देवराजब्राह्मणसंसदि स्याद-ब्राह्मणानां। क्षुद्रपश्वनृते साक्षी दश हन्ति, गोऽश्वपुरुषभूमिषु दशगुणोत्तरान्, सर्वं वा भूमौ हरणे नरको, भूमिवदप्सु, मैथुन-

संयोगे च पशुवन्मधुसर्पिषो, गोवद्वस्त्रहिरण्यधान्यब्रह्मसु, याने-ष्वश्ववन्मिथ्यावचने । याप्यो दण्ड्यश्च साक्षी, नानृतवचने दोषो जीवनञ्चेत्तदधीनं, न तु पापीयसो जीवनं । राजा प्राड्विवाको ब्राह्मणो वा शास्त्रवित्, प्राड्विवाको मध्यो भवेत् । संवत्सरं प्रतीक्षेत प्रतिभायां धेन्वनडुहस्त्रीप्रजननसंयुक्तेषु । शीघ्रमात्ययिके च । सर्वधर्म्मेभ्यो गरीयः प्राड्विवाके सत्यवचनं सत्यवचनम् ।

इति गौतमीये धर्मशास्त्रे त्रयोदशोऽध्यायः ॥ १० ॥

---

## चतुर्दशोऽध्यायः ।

शावमाशौचं दशरात्रमृत्विग्दीक्षितब्रह्मचारिणां सपिण्डा-नामेकादशरात्रं । क्षत्रियस्य द्वादशरात्रं, वैश्यस्यार्द्धमासमेकं मासं शूद्रस्य । तच्चेदन्तःपुनरापतेत् तच्छेषेण शुध्येरन्, रात्रिशेषे द्वाभ्यां, प्रभाते तिसृभिर्गोब्राह्मणहतानामन्वक्षं राजक्रोधाच्च युद्धे प्रायोनाशकशस्त्राग्निविषोदकोद्वन्धनप्रपतनैश्चेच्छतां । पिण्डनिवृत्तिः सप्तमे पञ्चमे वा जननेऽप्येवं । मातापित्रोस्तन्मा-तुर्वा गर्भमाससमा रात्रिः स्रंसने गर्भस्य । त्र्यहं वा श्रुत्वा चोर्द्ध्वं दशम्याः पक्षिण्यसपिण्डयोनिसम्बन्धे सहाध्यायिनि च सब्रह्म-चारिण्येकाहं श्रोत्रिये चोपसम्पन्ने प्रेतोपस्पर्शने । दशरात्रमा-शौचमभिसन्धाय चेदुक्तं वैश्यशूद्रयोरार्त्तवीर्वापूर्वयोश्च । त्र्यहं वाचार्य्यतत्पुत्रस्त्रीयाज्यशिष्येषु चैवमवरश्चेद्वर्णः पूर्वं वर्णमुप-स्पृशेत् पूर्वो वावरं तत्र शावोक्तमाशौचं। पतितचण्डालसूतिको-दक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेलोदकोपस्पर्शनाच्छुध्येच्छ-वानुगमे च । शुनश्च यदुपहन्यादित्येके उदकदानं सपिण्डैः

क्षतचूडस्य तत्स्त्रीणाञ्चानतिभोग एकेऽप्रदत्तानामधःशय्यासनिनो ब्रह्मचारिणः सर्वे न मार्जयेरन्न मासं भक्षयेयुराप्रदानात्। प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया वाससाञ्च त्यागः अन्त्ये त्वन्त्यानां दन्तजन्मादि मातापितृभ्यां तूष्णीं माता बालदेशान्तरितप्रव्रजितासपिण्डानां सद्यःशौचं। राज्ञाञ्च कार्य्यविरोधाद्ब्राह्मणस्य च स्वाध्यायानिवृत्त्यर्थं स्वाध्यायानिवृत्त्यर्थम्।

इति गौतमीये धर्म्मशास्त्रे चतुर्द्दशोऽध्यायः॥ १४॥

---

## पञ्चदशोऽध्यायः।

अथ श्राद्धममावस्यायां पितृभ्यो दद्यात्। पञ्चमीप्रभृति वापरपक्षस्य यथाश्राद्धं सर्वस्मिन् वा द्रव्यदेशब्राह्मणसन्निधाने वा कालनियमः; शक्तितः प्रकर्षेद्गुणसंस्कारविधिरन्नस्य। नवावरान् भोजयेदयुजो यथोत्साहं वा ब्राह्मणान् श्रोत्रियान् वाग्रूप वयःशीलसम्पन्नान्। युवभ्यो दानं प्रथममेके पितृवन्न च तेन मित्रकर्म्म कुर्य्यात्। पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्यु स्तदभावे ऋत्विगाचार्य्यौ। तिलमाषव्रीहियवोदकदानैर्मासं पितरः प्रीणन्ति, मत्स्यहरिणरुरुशशकूर्म्मवराहमेषमांसैः संवत्सराणि, गव्यपयःपायसैर्द्वादशवर्षाणि, वार्द्ध्रीणसेन मांसेन कालशाकच्छागलौहखड्गमांसैर्मधुमिश्रैश्चानन्त्यम्। न भोजयेत् स्तेनक्लीवपतितनास्तिकतद्वृत्तिवीरहाग्रेदिधिषुपतिषुपतिस्त्री-ग्रामयाजकाजपालोत्सृष्टाग्निमद्यप-कुचरकूटसाक्षिप्रतिहारिकानुपपत्तिर्यस्य च कुण्डाशी सोमविक्रय्य

शारदाह्नौ शरदावकीर्णिगणप्रेष्यागम्यागामिहिंस्रपरिवित्तिपरि-
वेत्तृपर्य्याहितपर्य्याधातृत्यक्तात्मदुर्बलाः कुनखिश्यावदन्ताः श्वित्रि-
पौनर्भवकितवाजप्रेष्यप्रातिरूपकशूद्रापतिनिराकृतिकिलासी कु-
सीदी वणिक्शिल्पोपजीविज्यावादित्रतालनृत्यगीतशीलान्,
पित्रा चाकामेन विभक्तान्, शिष्यांश्चैके सगोत्रांश्च। भोजयेदूर्द्ध्वं
त्रिभ्यो गुणवन्तम्। सद्यःश्राद्धी शूद्रातल्पगस्तत्पुरीषे मासं
नयति पितॄंस्तस्मात् तदहर्ब्रह्मचारी स्यात्। श्वपचचाण्डाल-
पतितावेक्षणे दुष्टं तस्मात् परिश्रुते दद्यात् तिलैर्वा किरेत्,
पङ्क्तिपावनो वा शमयेत्। पङ्क्तिपावनाः षड़ङ्गविज्ज्येष्ठसामि-
कस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः पञ्चाग्निः स्नातको मन्त्र-
ब्राह्मणविद्धर्मज्ञो ब्रह्मदेयानुसन्तान् इति हविःषु चैवं दुर्बला-
दीन् श्राद्ध एवैके श्राद्ध एवैके।

इति गौतमीये धर्म्मशास्त्रे पञ्चदशोऽध्यायः॥ १५॥

---

## षोड़शोऽध्यायः।

श्रवणादि वार्षिकं प्रौष्ठपदीं वोपाकृत्याधीयीत छन्दांस्यर्द्ध-
पञ्चमासान् पञ्चदक्षिणायनं वा ब्रह्मचार्य्युत्सृष्टलोमा। न मांसं
भुञ्जीत द्वैमास्यो वा नियमी नाधीयीत वायौ दिवा पांशुहरे
कर्णश्राविणि नक्तं वाणभेरीमृदङ्गगर्त्तार्त्तशब्देषु च श्वशृगाल-
गर्दभसंह्रादे लोहितेन्द्रधनुर्नीहारेष्वभ्रदर्शने चापत्तौ मूत्रित
उच्चरिते निशासन्ध्योदकेषु वर्षति चैके वल्मीकसन्तानमाचार्य्य-
परिवेषणे ज्योतिषोश्च भीतो यानस्थः शयानः प्रौढ़पादः
श्मशानग्रामान्तमहापथाशौचेषु पूतिगन्धान्तः शवदिवाकीर्त्ति-

शूद्रसन्निधाने सूतके चोदारे ऋग्यजुषञ्च सामशब्दे यावदा-
कालिका निर्घातभूमिकम्पराहुदर्शनोल्कास्तनयित्नुवर्षविद्युतः
प्रादुष्कृताग्निष्वनृतौ विद्युति नक्तञ्चापररात्रात् त्रिभागादि-
प्रवृत्तौ सर्वम्। उल्का विद्युत्समित्येकेषां। स्तनयित्नूरपरा-
ह्णेऽपि प्रदोषे सर्वं नक्तमर्द्धरात्रादहश्चेत् सज्योतिर्विषयस्थे च
राज्ञि प्रेते विप्रोष्य चान्योऽन्येन सह सङ्कुलोपाहितवेदसमाप्ति-
च्छर्द्दिश्राद्धमनुष्ययज्ञभोजनेष्वहोरात्रममावास्यायाञ्च द्व्यहं वा
कार्त्तिकी फाल्गुन्याषाढ़ी पौर्णमासी तिस्रोऽष्टकास्त्रिरात्र-
मन्त्यामेके अभितो वार्षिकं सर्वं वर्षविद्युत्स्तनयित्नुसन्निपाते
प्रस्यन्दिन्यूर्द्धं भोजनादुत्सवे प्राधीतस्य च निशायां चतुर्मुहूर्त्तं
नित्यमेके नगरे मानसमप्यशुचि श्राद्धिनामाकालिकमकृतान्न-
श्राद्धिकसंयोगे च प्रतिविद्यञ्च यावत् स्मरन्ति प्रतिविद्यञ्च
यावत् स्मरन्ति।

इति गौतमीये धर्म्मशास्त्रे षोड़शोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ।

प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत प्रति-
गृह्णीयाच्चैधोदकयवसमूल-फलमध्वभयाभ्युद्यतशय्यासनयान--
पयोदधिधानाशफरि प्रियङ्गुस्रङ्मार्गशाकान्यप्रणोद्यानि। सर्वेषां
पितृदेवगुरुभृत्यभरणे चान्यवृत्तिश्चेन्नान्तरेण शूद्रात् पशुपाल-
क्षेत्रकर्षककुलसङ्गतकारयितृपरिचारका भोज्यान्ना वणिक्
चाशिल्पी नित्यमभोज्यं केशकीटावपन्नं रजस्वलाकृष्णशकुनि-
पदोपहतं भ्रूणघ्नप्रेक्षितं गवोपघ्रातं भावदुष्टं शुक्तं केवलमदधि

पुनःसिद्धं पर्य्युषितमशाकभक्ष्यस्नेहमांस-मधुन्युत्सृष्ट पुंश्चल्यभि-शस्तानपदेश्यदण्डिकतक्षकदर्य्यबन्धनिकचिकित्सक मृगयु-कारु-च्छिष्टभोजिगण-विद्विषाणामपाङ्क्तानां । प्राग्दुर्बलात् दृष्टया-चाचमनोत्थानव्यपेतानि । समासमाभ्यां विषमसमे पूजान्त-रानर्च्चितश्च । गोश्च क्षीरमनिर्द्दशायाः सूतके चाजामहिष्योश्च नित्यमाविकमपेयमौष्ट्रमैकशफञ्च । स्यन्दिनीयमसूसन्धिनी-नाश्च याश्च व्यपेतवत्साः । पञ्चनखाश्चाशल्यकशशश्वाविद्-गोधाखड्गकच्छपाः । उभयतोदत्केशलोमैकशफकलविङ्कप्ल-वचक्रवाकहंसाः काककङ्कगृध्रश्येना जलजा रक्तपादतुण्डा ग्राम्यकुक्कुटशूकरौ धेन्वनडुहौ, चापन्नदावसन्नवृथामांसानि किसलयक्याकुलशुननिर्य्यासलोहित—व्रश्चनाश्चनिचुदारुबक-लाकटिट्टिभमान्धालनक्तञ्चरा अभक्ष्याः । भक्ष्याः प्रतुदा विष्किरा जालपादा मत्स्याश्चाविकृता वध्याश्च धर्म्मार्थे व्याल-हता दृष्टदोषवाक्प्रशस्तान्यभ्युक्ष्योपयुञ्जीतोपयुञ्जीत ।

इति गौतमीये धर्म्मशास्त्रे सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

अस्वतन्त्रा धर्म्मे स्त्री नातिचरेद्भर्त्तारं । वाक्चक्षुःकर्म्म-संयता पतिरपत्यलिप्सुर्द्देवरात् गुरुप्रसूता नर्त्तुमतीयात् पिण्ड-गोत्रर्षिसम्बन्धिभ्यो योनिमात्राद्वा । नादेवरादित्येके । नातिद्वितीयं जनयितुरपत्यं समयादन्यत्र जीवतश्च क्षेत्रे परस्मात् तस्य द्वयोर्वा रक्षणाद्भर्त्तुरेव नष्टे भर्त्तरि षाड्वार्षिकं क्षपणं श्रूयमाणेऽभिगमनं प्रव्रजिते तु निवृत्तिः प्रसङ्गात् तस्य

द्वादशवर्षाणि ब्राह्मणस्य विद्यासम्बन्धे भ्रातरि चैवं ज्यायसि यवीयान् कन्याग्न्युपयमेषु षड़ित्येके त्रीन् कुमार्य्यृतूनतीत्य स्वयं युज्येतानिन्दितेनोत्सृज्य पित्र्यानलङ्कारान् प्रदानं प्रागृतोर-प्रयच्छन् दोषी प्राग्वाससः प्रतिपत्तेरित्येके द्रव्यादानं विवाहसिद्ध्यर्थं धर्म्मतन्त्रसंयोगे च शूद्रादन्यत्रापि शूद्राद्बहु-पशोर्हीनकर्म्मणः शतगोरनाहिताग्नेः सहस्रगोश्च सोमपात् सप्तमीञ्चासुक्त्वा निचयायाप्यहीनकर्म्मभ्य आचक्षीत राज्ञा पृष्टस्तेन हि भर्त्तव्यः श्रुतशीलसम्पन्नश्चेद्धर्म्मतन्त्रपीड़ायां तस्या-करणे दोषो दोषः।

इति गौतमीये धर्म्मशास्त्रेऽष्टादशोऽध्यायः॥ १८॥

---

## एकोनविंशोऽध्यायः।

उक्तो वर्णधर्म्मश्चाश्रमधर्म्मश्चाथ खल्वयं पुरुषो येन कर्म्मणा लिप्यतेऽथैतद्याज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्टस्याक्रिया प्रतिषिद्धसेवनमिति च तत्र प्रायश्चित्तं कुर्य्यान्न कुर्य्यादिति मीमांसन्ते न कुर्य्यादित्याहुर्नहि कर्म्म क्षीयत इति कुर्य्यादित्य-परे पुनः स्तोमेनेष्ट्वा पुनः सवनमायातीति विज्ञायते व्रात्य-स्तोमेनेष्ट्वा तरति सर्व्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजतेऽग्निष्टुताभिशस्यमानं याजयेदिति च। तस्य निष्क्रय-णानि जपस्तपो होम उपवासो दानमुपनिषदो वेदान्ताः सर्व्वच्छन्दःसु संहिता मधून्यघमर्षणमथर्व्वशिरोरुद्राः पुरुष-सूक्तं राजनरौहिणे सामनी बृहद्रथन्तरे पुरुषगतिर्महानाम्न्यो महावैराजं महादिवाकीर्त्त्यं ज्येष्ठसाम्नामन्यतमद्बहिष्पवमानं

कूष्माण्डानि पावमान्यः सावित्री चेति पावनानि। पयोव्रतता शाकभक्षता फलभक्षता प्रसृतयावको हिरण्यप्राशनं घृतप्राशनं सोमपानमिति च मेध्यानि। सर्व्वे शिलोच्चयाः सर्व्वाः स्रवन्त्यः पुण्या ह्रदास्तीर्थान्यृषिनिवासगोष्ठपरिस्कन्दा इति देशाः। ब्रह्मचर्य्यं सत्यवचनं सवनेषूदकोपस्पर्शनमार्द्रवस्त्रताधःशायितानाशक इति तपांसि। हिरण्यं गौर्व्वासोऽश्वो भूमिस्तिला घृतमन्नमिति देयानि। संवत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहो द्वादशाहः षडहस्त्र्यहोऽहोरात्र इति कालाः। एतान्येवानादेशे विकल्पेन क्रियेरन् एनःसु गुरुषु गुरूणि लघुषु लघूनि कृच्छ्रातिकृच्छ्रं चान्द्रायणमिति सर्वप्रायश्चित्तं सर्वप्रायश्चित्तम्।

इति गौतमीये धर्मशास्त्रे एकोनविंशोऽध्यायः॥ १९॥

---

## विंशोऽध्यायः।

अथ चतुःषष्टिषु यातनास्थानेषु दुःखान्यनुभूय तत्रेमानि लक्षणानि भवन्ति। ब्रह्महार्द्रकुष्ठी, सुरापः श्यावदन्तो, गुरुतल्पगः पङ्गुः, स्वर्णहारी कुनखी, श्वित्री वस्त्रापहारी हिरण्यहारी दर्द्दुरी, तेजोऽपहारी मण्डली, स्नेहापहारी क्षयी, तथाजीर्णवानन्नापहारी, ज्ञानापहारी मूकः, प्रतिहन्ता गुरोरपस्मारी, गोघ्नो जात्यन्धः, पिशुनः पूतिनासः, पूतिवक्त्रस्तु सूचकः, शूद्रोपाध्यायः श्वपाकस्त्रपुसीसचामरविक्रयी मद्यप, एकशफविक्रयी मृगव्याधः, कुण्डाशी भृतकाश्वेलिको वा नक्षत्री स्वार्बुदी, नास्तिको रङ्गोपजीव्यभक्ष्यभक्षी गण्डरी, ब्रह्मपुरुष-

तस्कराणां देशिकः पिण्डितः षण्डो महापथिक गणिडक-चण्डालो पुल्कसो गोष्ववकीर्णी मध्यामेही, धर्म्मपत्नीषु स्यान्मैथुनप्रवर्त्तकः खल्वाटसगोत्रसमयस्त्र्यभिगामी पितृमातृभगिनीस्त्र्यभिगाम्यावीजितस्तेषां कुनकुष्ठमण्डव्याधितव्यङ्गदरिद्राल्पायुषोऽल्पवुद्धयश्चण्ड पण्डशैलूष-तस्कर-परपुरुष-प्रेष्यपरकर्म्मकराः, खल्वाटचक्राङ्कसङ्कीर्णाः क्रूरकर्म्माणः क्रमशश्चान्यथोपपद्यन्ते तस्मात् कर्त्तव्यमेवेह प्रायश्चित्तं विशुद्धैर्लक्षणैर्जायन्ते धर्म्मस्य धारणादिति धर्म्मस्य धारणादिति।

इति गौतमीये धर्म्मशास्त्रे विंशोऽध्यायः॥ २०॥

---

## एकविंशोऽध्यायः।

त्यज्येत् पितरं राजघातकं शूद्रायाजकं वेदविप्लावकं भ्रूणहनं यश्चान्त्यावसायिभिः सह संवसेदन्त्यावसायिन्या वा तस्य विद्यागुरून् योनिसम्बन्धांश्च सन्निपात्य सर्व्वाण्युदकादीनि प्रेतकर्म्माणि कुर्य्युः पात्रञ्चास्य विपर्य्यस्येयुः। दासः कर्म्मकरो वायकरादमेध्यपात्रमानीय दासी घटान् पूरयित्वा दक्षिणामुखः पदा विपर्य्यस्येदमनुदकं करोमिति नामग्राहन्तं सर्व्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनिसम्बन्धाश्च वीक्षेरन्नप उपस्पृश्य ग्रामं प्रविशन्ति। अत ऊर्द्ध्वं तेन सम्भाष्य तिष्ठेदेकरात्रं जपन् सावित्रीमज्ञानपूर्व्वं ज्ञानपूर्व्वञ्चेत् त्रिरात्रम्। यस्तु प्रायश्चित्तेन शुध्येत् तस्मिन् शुद्धे शातकुम्भमयं पात्रं पुण्यतमाद्ध्रदात् पूरयित्वा स्रवन्तीभ्यो वा त इनमप उपस्पर्शयेयुः। अथास्मै तत्पात्रं दद्युस्तत्

सम्प्रतिष्ठस्व जपेच्छान्ता द्यौः शान्ता पृथिवी शान्तं शिव-मन्तरीक्षं यो रोचनस्तमिह गृह्णामीत्येतैर्यजुभिः पावमानीभि-स्तरत्समन्दीभिः कुष्माण्डैश्चाज्यं जुहुयाद्धिरण्यं ब्राह्मणाय वा दद्याद्गामाचार्य्याय। यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येत्। तस्य सर्व्वाण्युदकादीनि प्रेतकर्म्माणिकुर्य्युरेतदेव शान्त्युदकं सर्व्वेषूपपातकेषूपपातकेषु।

इति गौतमीये धर्म्मशास्त्रे एकविंशोऽध्यायः॥ २१॥

---

## द्वाविंशोऽध्यायः।

ब्रह्महःसुराप-गुरुतल्पग-मातृपितृयोनिसम्बन्धगस्तेननास्तिक-निन्दितकर्म्माभ्यासि-पतितात्याग्यपतितत्यागिनः पातक-संयोजकाश्च तैश्चाब्दं समाचरन्। द्विजातिकर्म्मभ्यो हानिः पतनं परत्र चासिद्धिस्तामेके नरकं। त्रीणि प्रथमान्यनिर्द्देश्यानि मनुर्न्न स्त्रीष्वगुरुतल्पगः पततीत्येके भ्रूणहनि हीनवर्णसेवायाञ्च स्त्री पतति कौटसाक्ष्यं राजगामिपैशुनं गुरोरनृताभिशंसनं महापातकसमानि। अपाङ्क्त्यानां प्रागदुर्व्वलाद्गोहन्तब्रह्मो-ज्झ्यतन्मान्त्रकृदवकीर्णपतितसावित्रीकेषूपपातकं, याजनाध्य-पनादृत्विगाचार्य्यौ पतनीयसेवायाञ्चहेयावन्यत्र हानात् पतति। तस्य च प्रतिग्रहीतेत्येके। न कर्हिचिन्मातापित्रोरवृत्तिदायन्तु न भजेरन्। ब्राह्मणाभिशंसने दोषस्तावान् द्विरनेनसि दुर्व्वल-हिंसायामपि मोचने शक्तश्चेत्। अभिक्रध्यावगोरणं ब्राह्मणस्य वर्षशतमस्वर्ग्यं, निर्घाते सहस्रं, लोहितदर्शने यावतस्तत्प्रस्कन्द्य पांशून् संगृह्णीयात्।

इति गौतमीये धर्म्मशास्त्रे द्वाविंशोऽध्यायः॥ २२॥

## त्रयोविंशोऽध्यायः।

प्रायश्चित्तमग्नौ शक्तिर्ब्रह्मघ्नस्त्रिरवच्छादितस्य लक्ष्यं वा स्याज्जन्ये शस्त्रभृताम्। खट्वाङ्गकपालपाणिर्वा द्वादश संवत्सरान् ब्रह्मचारी भैक्षाय ग्रामं प्रविशेत् स्वकर्माचक्षाणः, पथोपक्रामेत् सन्दर्शनादार्य्यस्य। स्थानासनाभ्यां विहरन् सवणेषूदकोपस्पर्शी शुध्येत्। प्राणलाभे वा तन्निमित्ते ब्राह्मणस्य द्रव्यापचये वा त्र्यवरं प्रति राज्ञोऽश्वमेधावभृथे वान्ययज्ञेऽप्यग्निष्टुदन्तश्चेत्सृष्टश्चेद्ब्राह्मणवधे। हत्वापि आत्रेय्याश्चैवं गर्भे चाविज्ञाते वा। ब्राह्मणस्य राजन्यवधे षड्वार्षिकं प्राकृतं ब्रह्मचर्य्यं ऋषभैकसहस्राश्च गा दद्यात्। वैश्ये त्रैवार्षिकं ऋषभैकशताश्च गा दद्यात्। शूद्रे संवत्सरमृषभैकादशाश्च गा दद्यादनात्रेय्याश्चैवं गाश्च। वैश्यवन्मण्डूकनकुलकाकविवरचरमूषिकाश्च। हिंसासु चास्थिमतां सहस्रं हत्वानस्थिमतामनडुद्भारे च। अपि वास्थिमतामेकैकस्मिन् किञ्चिद्दद्यात्। षण्ढे च पलालभारः सीसमाषश्च, वराहे घृतघटः, सर्पे लौहदण्डो, ब्रह्मबन्ध्वाश्च ललनायां जीवोवैशिकेन किञ्चित्तल्पान्नधनलाभवधेषु पृथग्वर्षाणि द्वे, परदारे त्रीणि। श्रोत्रियस्य द्रव्यलाभे चोत्सर्गो यथास्थानं वा गमयेत्। प्रतिषिद्धमन्त्रसंयोगे सहस्रवाक् चेदग्न्युत्सादिनिराकृत्युपपातकेषु, चैवं स्त्री चातिचारिणी गुप्ता पिण्डन्तु लभेत। अमानुषीषु गोवर्ज्जं स्त्रीकृते कुष्माण्डैर्घृतहोमो घृतहोमः।

इति गौतमीये धर्म्मशास्त्रे त्रयोविंशोऽध्यायः॥ २३॥

---

# चतुर्विंशोऽध्यायः ।

सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये मृतः शुध्येदमत्या पाने पयोघृतमुदकं वायुं प्रतित्र्यहं तप्तानि सकृच्छ्रस्ततोऽस्य संस्कारः। मूत्रपुरीषरेतसाञ्च प्राशने श्वापदोष्ट्रखराणाञ्चाङ्गस्य ग्राम्यकुक्कुटशूकरयोश्च गन्धाघ्राणे सुरापस्य प्राणायामो घृतप्राशनञ्च पूर्व्वञ्च दष्टस्य (दृष्टस्य)। तल्पे लोहशयने गुरुतल्पगः शयीत सूर्म्मीं वा ज्वलन्तीं श्लिष्येल्लिङ्गं वा सवृषणमुत्कृत्याञ्जलावाधाय दक्षिणाप्रतीचीं व्रजेदजिह्ममा शरीरनिपातान्मृतः शुध्येत। सखीसयोनिसगोत्राशिष्यभार्य्यासु स्नुषायां गवि च तल्पसमोऽवकर इत्येके श्वभिरादायेद्राजा निहीनवर्णगमने स्त्रियं प्रकाशं पुमांसं खादयेद्यथोक्तं वा गर्द्दभेनावकीर्णी निरृतिं चतुष्पथे यजेत तस्याजिनं मूर्द्धवालं परिधाय लोहितपात्रः सप्त गृहान् भैक्षं चरेत् कर्म्माचक्षाणः संवत्सरेण शुध्येत्। रेतस्कन्दने भये रोगे सुप्तेऽग्नीन्धनभैक्षचरणानि सप्तरात्रं कृत्वाज्यहोमः समिधस्य्वेर्व्वा रेतस्याभ्यां सूर्य्याभ्युदिते ब्रह्मचारी तिष्ठेदहरहर्भुञ्जानोऽभ्यस्तमिते च रात्रिं जपन् सावित्रीमशुचिं दृष्ट्वादित्यमीक्षेत प्राणायामं कृत्वाभोज्यभोजनेऽमेध्यप्राशने वा निष्पुरीषीभावस्त्रिरात्रावरमभोजनं सप्तरात्रं वा स्वयं शीर्णान्युपयुञ्जानः फलान्यनतिक्रामन् प्राक्पञ्चनखेभ्यश्छर्द्दिनो घृतप्राशनञ्चाक्रोशानृतहिंसासु त्रिरात्रं परमन्तपः सत्यवाक्ये चेद्वारुणीपावमानीभिर्होमो विवाहमैथुननिर्म्मात्यसंयोगेष्वदोष-

स्वैरेऽनृतं न तु खलु गुर्व्वर्थेषु यतः सप्त पुरुषानितश्च परतश्च हन्ति मनसापि गुरोरनृतं वदन्नल्पेष्वप्यर्थेष्वन्त्यावसायिनीगमने कृच्छ्राब्दोऽमत्या द्वादशरात्रमुदक्यागमने त्रिरात्रं त्रिरात्रम्।

इति गौतमीये धर्म्मशास्त्रे चतुर्व्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः।

रहस्यं प्रायश्चित्तमविख्यातदोषस्य चतुर्ऋचं तरत्समन्दी-त्यप्सु जपेदप्रतिग्राह्यं प्रतिजिघृक्षन् प्रतिगृह्य वाभोज्यं बुभुक्षमाणः पृथिवीमावपेदृत्वन्तरारमण उदकोपस्पर्शनाच्छुद्धि-मेके स्त्रीषु पयोव्रतो वा दशरात्रं घृतेन द्वितीयमद्भिस्तृतीयं दिवादिष्वेकभक्तिको जलक्लिन्नवासा लोमानि नखानि त्वचं मांसं शोणितं स्नाय्वस्थिमज्जानमिति होम आत्मनो मुखे मृत्योरास्ये जुहोमीत्यन्ततः। सर्व्वेषामेतत् प्रायश्चित्तं भ्रूण-हत्यायाः। तथान्य उक्तो नियमोऽग्ने त्वं पारयेति महा-व्याहृतिभिर्जुहुयात् कुष्माण्डैश्चाज्यं तद्व्रत एव वा ब्रह्महत्या-सुरापानस्तेयगुरुतल्पेषु प्राणायामैः स्नातोऽघमर्षणं जपेत् सममश्वमेधावभृथेन सावित्रीं वा सहस्रकृत्व आवर्त्तयन् पुनीतेहैवात्मानमन्तर्ज्जले वाघमर्षणं त्रिरावर्त्तयन् पापेभ्यो मुच्यते मुच्यते।

इति गौतमीये धर्म्मशास्त्रे पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## षड्विंशोऽध्यायः ।

तदाहुः कतिधावकीर्णी प्रविशतीति मरुतः प्राणेनेन्द्रं बलेन बृहस्पतिं ब्रह्मवर्चसेनाग्निमेवेतरेण सर्व्वेणेति सोऽमावास्यायां निश्यग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा कामाभिसुग्धोऽस्म्यभिसुग्धोऽस्मि कामकामाय स्वाहेति समिधमाधायानुपर्य्युक्ष्य यज्ञवास्तु कृत्वोपस्थाय सन्माभिञ्चन्त्वित्येतया त्रिरुपतिष्ठेत त्रय इमे लोका एषां लोकानामभिजित्या अभिक्रान्त्या इत्येतदेवैकेषां कर्म्माधिकृत्ययोः पूत इव स्यात् स इत्थं जुहुयादित्थमनुमन्त्रयेद्वरो दक्षिणेति । प्रायश्चित्तमविशेषाद-मार्ज्जवपैशुन-प्रतिपिद्धाचारानाद्य प्राशनेषु । शूद्रायाञ्च रेतः सिक्त्वा योनौ च दोषवति कर्म्मण्यभिसन्धिपूर्व्वेष्वब्लिङ्गाभिरप उपस्पृशेद्वारुणीभिरन्यैर्वा पवित्रैः प्रतिपिद्धवाड्मनसयोरपचारे व्याहृतयः सञ्ज्ञाताः पञ्च सर्व्वास्त्वपो वाचामिदञ्च आदित्यञ्च पुनातु स्वाहेति प्रातः रात्रिश्च मा वरुणश्च पुनात्विति सायमष्टौ वा समिधमादध्याद्देवकृतस्येति हुत्वैवं सर्व्वस्मादेनसो मुच्यते मुच्यते ।

इति गौतमीये धर्म्मशास्त्रे षड्‌विंशोऽध्यायः ॥ २७ ॥

---

## सप्तविंशोऽध्यायः ।

अथातः कृच्छ्रान् व्याख्यास्यामो । हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयादथापरं त्र्यहं नक्तं भुञ्जीत अथापरं त्र्यहं न कञ्चन याचेदथापरं त्र्यहमुपवसेत् तिष्ठे-

दर्शनि, रात्रावासीत। क्षिप्रकामः सत्यं वदेदनार्य्यैर्न सम्भाषेत, रौरवयौधाजिने नित्यं प्रयुञ्जीतानुसवनमुदकोपस्पर्शनमापोहिष्ठेति तिसृभिः पवित्रवतीभिर्म्मार्ज्जयेत् हिरण्यवर्णाः शुचयः पावका इत्यष्टाभिः। अथोदकतर्पणं। ॐ नमो हमाय मोहमाय मंहमाय धुन्वते तापसाये पुनर्वसवे नमो नमो, मोञ्ज्याय उर्म्याय वसुविन्दाय सर्वविन्दाय नमो नमः, पाराय सुपाराय महापाराय पारयिष्णवे नमो नमो, रुद्राय पशुपतये महते देवाय त्र्यम्बकायैकचराधिपतये हराय शर्व्वायेशानायोग्राय वज्रिणे घृणिने कपर्द्दिने नमो नमः, सूर्य्यायादित्याय नमो नमो, नीलग्रीवाय शितिकण्ठाये नमो नमः, कृष्णाय पिङ्गलाय नमो नमो, ज्येष्ठाय श्रेष्ठाय वृद्धायेन्द्राय हरिकेशायोर्द्ध्वरेतसे नमो नमः, सत्याय पावकाय पावकवर्णाय कामरूपिणे नमो नमो, दीप्ताय दीप्तरूपिणे नमो नमस्तीक्ष्णरूपिणे नमोनमः, सौम्याय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमो नमश्चन्द्रललाटाय कृत्तिवाससे पिनाकहस्ताय नमो नम इति। एतदेवादित्योपस्थानमेता एवाज्याहुतयो; द्वादशरात्रस्यान्ते चरुं श्रपयित्वैताभ्यो देवताभ्यो जुहुयात् अग्नये स्वाहा, सोमाय स्वाहाग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतये अग्नये स्विष्टिकृत इति। ततो ब्राह्मणतर्पणम्। एतेनैवातिकृच्छ्रो व्याख्यातो यावत्। सकृदाददीत तावदश्नीयादब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः। प्रथमं चरित्वा शुचिः पूतः कर्म्मण्यो भवति। द्वितीयं चरित्वा यत्किञ्चिदन्यन्महापातकेभ्यः पापं कुरुते तस्मात् प्रमुच्यते। तृतीयं चरित्वा सर्वस्मादेनसो मुच्यते। अथैतांस्त्रीन् कृच्छ्रान्

चरित्वा सर्वेषु वेदेषु स्नातो भवति। सर्वैर्देवैर्ज्ञातो भवति यश्चैवं वेद यश्चैवं वेद।

इति गौतमीये धर्मशास्त्रे सप्तविंशोऽध्यायः॥ २७॥

---

## अष्टाविंशोऽध्यायः।

अथातश्चान्द्रायणं। तस्योक्तो विधिः; कृच्छ्रे वपनं व्रतं चरेत् श्वोभूतां पौर्णमासीमुपवसेदाप्यायस्व सन्ते पयांसि नवो नव इति चैताभिस्तर्पणमाज्यहोमा हविषश्चानुमन्त्रणमुपस्थानं चन्द्रमसो यद्देवा देवहेडनमिति चतसृभिराज्यं जुहुयाद्देवकृतस्येति चान्ते समिद्भिर्ॐ भूर्भुवः स्वस्तपः सत्यं यशः श्रीरूर्ग्गिरौजस्तेजः पुरुषो धर्मः शिवः शिव इत्येतैर्ग्रासानुमन्त्रणं। प्रतिमन्त्रं मनसा नमः स्वाहेति वा। सर्वग्रासप्रमाणमास्याविकारेण चरुभैक्षसक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानि हवींषि। उत्तरोत्तरं प्रशस्तानि। पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वैकापचयेन परपक्षमश्नीयादमावास्यायामुपोष्यैकोपचयेन पूर्वपक्षं विपरीतमेकेषाम्। एष चान्द्रायणो मासो। मासमेतमाप्त्वा विपापो विपाप्मा सर्वमेनो हन्ति। द्वितीयमाप्त्वा दश पूर्वान् दशावरानात्मानञ्चैकविंशं पङ्क्तीश्च पुनाति। संवत्सरञ्चाप्त्वा चन्द्रमसः सलोकतामाप्नोति सलोकतामाप्नोति।

इति गौतमीये धर्मशास्त्रेऽष्टाविंशोऽध्यायः॥ २८॥

---

## एकोनत्रिंशोऽध्यायः।

ऊर्द्ध्वं पितुः पुत्रा ऋक्थं भजेरन्। निवृत्ते रजसि मातुर्जीवति चेच्छति सर्वं वा पूर्वजस्येतरान् विभृयात्। पूर्ववद्विभागे तु धर्म्मवृद्धिः। विंशतिभागो ज्येष्ठस्य मिथुनमुभयतोदद्युक्तो रथो गोवृषः। काणखोरकूटषण्डा मध्यमस्य। अनेकाश्चेदविर्धान्यायसी गृहमनोयुक्तं चतुष्पदाञ्चैकैकं यवीयसः। समधेतरत् सर्वं द्व्यंशी वा पूर्वजः स्यादेकैकमितरेषामेकैकं वा धनरूपं काम्यं पूर्वः पूर्वो लभेत। दशतः पशूनां नैकशफाः नैकशफानां वृषभोऽधिको ज्येष्ठस्य। वृषभषोड़शा ज्यैष्ठिनेयस्य समं वा ज्यैष्ठिनेयेन यवीयसां। प्रतिमातृ वा स्ववर्गे भागविशेषः। पितोत्सृजेत् पुत्रिकामनपत्योऽग्निं प्रजापतिञ्चेष्ट्वाऽस्मदर्थमपत्यमिति संवाद्याभिसन्धिमात्रात् पुत्रिकेत्येकेषां। तत्संशयान्नोपयच्छेदभ्रातृकाम्। पिण्डगोत्रर्षिसम्बन्धा ऋक्थं भजेरन्, स्त्री चानपत्यस्य। बीजं वा लिप्सेत देवरवत्यन्यतो जातमभागम्। स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च। भगिनीशुल्कं सोदार्य्याणामूर्द्ध्वं मातुः पूर्वञ्चैके। संसृष्टविभागः प्रेतानां ज्येष्ठस्य संसृष्टिनि प्रेते असंसृष्टी ऋक्थभाक्, विभक्तजः पित्र्यमेव। स्वमर्ज्जितं वैद्योऽवैद्येभ्यः कामं भजेरन्। पुत्रा औरसक्षेत्रजदत्तकृत्रिमगूढोत्पन्नापविद्धा ऋक्थभाजः। कानीनसहोढपौनर्भवपुत्रिकापुत्रस्वयन्दत्तक्रीता गोत्रभाजश्चतुर्थांशभागिनश्चौरसाद्यभावे। ब्राह्मणस्य राजन्यापुत्रो ज्येष्ठो गुणसम्पन्नस्तुल्यांशभाक् ज्येष्ठांशहीनमन्यत्; राजन्यावैश्यापुत्रसमवाये स यथा ब्राह्मणीपुत्रेण।

क्षत्रियाच्चेत् शूद्रापुत्रोऽप्यनपत्यस्य शुश्रूषुश्चेल्लभेत वृत्तिमूल-मन्तेवासिविधिना। सवर्णापुत्रोऽप्यन्याय्यवृत्तो न लभेतैकेषां। श्रोत्रियो ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्, राजेतरेषां। जड-क्लीबौ भर्त्तव्यावपत्यं जडस्य भागार्हं शूद्रापुत्रवत्। प्रतिलोमा-सूदकयोगक्षेमकृतान्नेष्वविभागः, स्त्रीषु च। संयुक्तास्त्वनाम्नाते दशावरैः शिष्टैरूहवद्भिरलुब्धैः प्रशस्तं कार्य्यम्। चत्वारश्चतुर्णां पारगा वेदानां, प्रागुत्तमात्त्रय आश्रमिणः, पृथग्धर्म्मविदस्त्रय, एतान् दशावरान् परिषदित्याचक्षते। असम्भवे त्वेतेषां श्रोत्रियो वेदविच्छिष्टो विप्रतिपत्तौ यदाह, यतोऽयमप्रभवो भूतानां हिंसानुग्रहयोगेषु। धर्म्मिणां विशेषेण स्वर्गं लोकं धर्म्मविदाप्नोति ज्ञानाभिनिवेशाभ्यामिति धर्म्मो धर्म्मः।

इति गौतमीये धर्म्मशास्त्रे एकोनत्रिंशोऽध्यायः॥ २९॥

---

# आपस्तम्बसंहिता।

## प्रथमोऽध्यायः।

आपस्तम्बं प्रवक्ष्यामि प्रायश्चित्तविनिर्णयम्।
दूषितानां हितार्थाय वर्णानामनुपूर्वशः॥ १

परेषां परिवादेषु निवृत्तमृषिसत्तमम्।
विविक्तदेश आसीनमात्मविद्यापरायणम्॥ २

अनन्यमनसं शान्तं सर्वस्वं योगवित्तमम्।
आपस्तम्बमृषिं सर्व्वे समेत्य मुनयोऽब्रुवन्॥ ३

भगवन् मानवा सर्व्वे असन्मार्गे स्थिता यदा।
चरेयुर्धर्म्मकार्य्याणां तेषां ब्रूहि विनिष्कृतिम्॥ ४

यतोऽवश्यं गृहस्थेन गवादिपरिपालनम्।
कृषिकर्मादि चापत्सु द्विजामन्त्रणमेव च॥ ५

दियद्यानार्थकेऽवश्यं विप्रादीनाञ्च भेषजम्।
बालानां स्तन्यपानादिकार्य्येष्वपि पालनम्॥ ६

एवं कृते कथञ्चित् स्यात् प्रमादो यद्यकामतः।
गवादीनां ततोऽस्माकं भगवन् ब्रूहि निष्कृतिम्॥ ७

एवमुक्तः क्षणं ध्यात्वा प्रणिपातादधोमुखः।
दृष्ट्वा ऋषीनुवाचेदमापस्तम्बः सुनिश्चितम्॥ ८

बालानां स्तनपानादिकार्य्ये दोषो न विद्यते।
विपत्तावपि विप्राणामामन्त्रणार्चिकत्मने॥ ९

गवादीनां प्रवक्ष्यामि प्रायश्चित्तं रुजादिषु।
रोधिनाद्धर्नं दोषोऽत्र देवतारणभिषजे॥ १०

औषधं लवणञ्चैव स्नेहपुष्ट्यान्नभोजनम्।
प्राणिनां प्राणहृत्यर्थं प्रायश्चित्तं न विद्यते॥ ११

अतिरिक्तं न दातव्यं काले स्वल्पन्तु दापयेत्।
अतिरिक्ते विपन्नानां कृच्छ्रमेव विधीयते॥ १२

त्र्यहं निरशनात् पादः पादश्चायाचितं त्र्यहम्।
पादः सायं त्र्यहं पादः प्रातर्भोज्यं तथा त्र्यहम्। १३

प्रातः सायं दिनार्द्धञ्च पादोनं सायवर्ज्जितम्। १४

प्रातः पादं चरेच्छूद्रः सायं वैश्यस्य दापयेत्।
अयाचितन्तु राजन्ये त्रिरात्रं ब्राह्मणस्य च॥ १५

पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत्।
योजने पादहीनञ्च चरेत् सर्वं निपातने॥ १६

घण्टाभरणदोषेण गौस्तु यत्र विपद्यते।
चरेदर्द्धव्रतं तत्र भूषणार्थं कृतं हि तत्॥ १७

दमने वा निरोधे वा सङ्घाते चैव योजने।
स्तम्भशृङ्खलपाशेषु मृते पादोनमाचरेत्॥ १८

पाषाणैर्लगुडैर्वापि शस्त्रेणान्येन वा बलात्।
निपातयन्ति ये गास्तु तेषां सर्वं विधीयते॥ १९

प्राजापत्यं चरेद्विप्रः पादोनं क्षत्रियश्चरेत्।
कृच्छ्रार्द्धन्तु चरेद्वैश्यः पादं शूद्रस्य दापयेत्॥ २०

द्वौ मासौ दापयेद्वत्सं द्वौ मासौ द्वौ स्तने दुहेत्।
द्वौ मासावेकवेलायां शेषकाले यथारुचि॥ २१

दमतामर्द्धमासेन गौस्तु यत्र विपद्यते।
सशिखं वपनं कृत्वा प्राजापत्यं समाचरेत्॥ २२

हलमष्टगवं धर्म्यं षड्गवं जीवितार्थिनाम्।
चतुर्गवं नृशंसानां द्विगवञ्च जिघांसिनाम्॥ २३

अतिवाहातिदोहाभ्यां नासिकाभेदने तथा।
नदीपर्व्वतसंरोधे मृते पादोनमाचरेत्॥ २४

न नारिकेलवालाभ्यां न मुञ्जेन न चर्म्मणा।
एभिर्गास्तु न वध्नीयाद्वद्ध्वा परवशो भवेत्॥ २५

कुशैः काशैश्च वध्नीयाद्वृषभं दक्षिणामुखम्।
पादलग्नाग्निदोषेषु प्रायश्चित्तं न विद्यते॥ २६

व्यापन्नानां बहूनान्तु रोधने बन्धनेऽपि च।
भिषङ्मिथ्योपचारे च द्विगुणं गोव्रतं चरेत्॥ २७

शृङ्गभङ्गेऽस्थिभङ्गे च लाङ्गूलस्य च कर्त्तने।
सप्तरात्रं पिबेद्दुग्धं यावत् स्वस्था पुनर्भवेत्॥ २८

गोमूत्रेण तु सम्मिश्रं यावकं भक्षयेद्द्विजः।
एतद्धि मिश्रितञ्चैव मुक्तञ्चोशनसा स्वयम्॥ २९

देवद्रोण्यां विहारेषु कूपेष्वायतनेषु च।
एषु गोषु विपन्नेषु प्रायश्चित्तं न विद्यते॥ ३०

एका पादात्तवद्धुभिर्द्दैवात्त्रापादिता क्वचित्।
पादं पादन्तु हत्यायाश्चरेयुस्ते पृथक् पृथक्॥ ३१

यन्त्रणे गोश्चिकित्सार्थे मूढगर्भविमोचने।
यत्न कृते विपत्तिश्चेत् प्रायश्चित्तं न विद्यते॥ ३२

सरोम प्रथमे पादे द्वितीये श्मश्रुकर्त्तनम्।
तृतीये तु शिखा धार्य्या सशिखन्तु निपातने॥ ३३

सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् ।
एवमेव तु नारीणां शिरसो मुण्डनं स्मृतम् ॥ ३४

इत्यापस्तम्बीये धर्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

आरूढ़हस्तगतं पण्यं यच्च ग्रामादिनिःसृतम् ।
स्त्रीबालवृद्धाचरितं प्रत्यक्षादृष्टमेव च ॥ १ ॥

प्रपास्वरण्येषु जलेऽथ सौरे
द्रोण्यां जलं यच्च विनिःसृतं भवेत् ।
श्वपाकचाण्डालपरिग्रहेषु
पीत्वा जलं पञ्चगव्येन शुद्धिः ॥ २

न दुष्येत् सन्तता धारा वातोद्धृताश्च रेणवः ।
स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन ॥ ३

आत्मशय्या च वस्त्रञ्च जायापत्यं कमण्डलुः ।
आत्मनः शुचिरेतानि परेषामशुचीनि तु ॥ ४

अन्यैस्तु खानिताः कूपास्तड़ागानि तथैव च ।
एषु स्नात्वा च पीत्वा च पञ्चगव्येन शुध्यति ॥ ५

उच्छिष्टमशुचित्वञ्च यच्च विष्ठानुलेपनम् ।
सर्व्वं शुध्यति तोयेन तत्तोयं केन शुध्यति ॥ ६

सूर्य्यरश्मिनिपातेन मारुतस्पर्शनेन च ।
गवां मूत्रपुरीषेण तत्तोयं तेन शुध्यति ॥ ७

अस्थिचर्म्मादियुक्तन्तु खराश्वाद्यैरपदूषितम् ।
उद्धरेदुदकं सर्व्वं शोधनं परिमार्ज्जनम् ॥ ८

कूपो मूत्रपुरीषेण ष्ठीवनेनापि दूषितः।
श्वशृगालखरोष्ट्रैश्च क्रव्यादैश्च जुगुप्सितः॥ ९
उद्धृत्यैव च तत्तोयं सप्त पिण्डान् समुद्धरेत्।
पञ्चगव्यं मृदा पूतं कूपे तच्छोधनं स्मृतम्॥ १०
वापीकूपतड़ागानां दूषितानाञ्च शोधनम्।
कुम्भानां शतमुद्धृत्य पञ्चगव्यं ततः क्षिपेत्॥ ११
यस्तु कूपात् पिबेत्तोयं ब्राह्मणः शवदूषितात्।
कथं तत्र विशुद्धिः स्यादिति मे संशयो भवेत्॥ १२
अक्लिन्नेनाप्यभिन्नेन शवेन परिदूषिते।
पीत्वा कूपे त्वहोरात्रं पञ्चगव्येन शुध्यति॥ १३
क्लिन्ने भिन्ने शवे चैव तत्रस्थं यदि तत् पिबेत्।
शुद्धिश्चान्द्रायणं तस्य तप्तकृच्छ्रमथापि वा॥ १४

इत्यापस्तम्बीये धर्मशास्त्रे द्वितीयोऽध्यायः॥ २॥

---

## तृतीयोऽध्यायः।

अन्त्यजातेरविज्ञातो निवसेद्यस्य वेश्मनि।
सम्यग् ज्ञात्वा तु कालेन द्विजाः कुर्व्वन्त्यनुग्रहम्॥ १
चान्द्रायणं पराको वा द्विजातीनां विशोधनम्।
प्राजापत्यन्तु शूद्रस्य शेषं तदनुसारतः॥ २
यैर्भुक्तं तत्र पक्वान्नं कृच्छ्रं तेषां प्रदापयेत्।
तेषामपि च यैर्भुक्तं कृच्छ्रपादं प्रदापयेत्॥ ३
कूपैकपानैर्दुष्टानां स्पर्शेन शवदूषिणाम्।
तेषामेकोपवासेन पञ्चगव्येन शोधनम्॥ ४

बालो वृद्धस्तथा रोगी गर्भिणी वापि पीड़िता ।
तेषां नक्तं प्रदातव्यं बालानां प्रहरद्वयम ॥ ५
अशीतिर्यस्य वर्षाणि बालो वाप्यनषोड़श: ।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो व्याधित एव च ॥ ६
न्यूनैकादशवर्षस्य पञ्चवर्षाधिकस्य च ।
चरेद्गुरु: सुहृद्वापि प्रायश्चित्तं विशोधनम् ॥ ७
अथवा क्रियमाणेषु येषामार्त्ति: प्रदृश्यते ।
शेषसम्पादनाच्छुद्धिर्विपत्तिर्न भवेद्यथा ॥ ८
क्षुधा व्याधितकायानां प्राणो येषां विपद्यते ।
ये न रक्षन्ति भक्तेन तेषां तत् किल्बिषं भवेत् ॥ ९
पूर्णेऽपि कालनियमे न शुद्धिर्ब्राह्मणैर्विना ।
अपूर्णेष्वपि कालेषु शोधयन्ति द्विजोत्तमा: ॥ १०
समाप्तमिति नो वाच्यं त्रिषु वर्णेषु कर्हिचित् ।
विप्रसम्पादनं कार्य्यमुत्पन्ने प्राणसंशये ॥ ११
सम्पादयन्ति यद्विप्रा: स्नानतीर्थं फलञ्च तत् ।
सम्यक् कर्त्तुरपायं स्यादव्रती च फलमाप्नुयात् ॥ १२
इत्यापस्तम्बीये धर्मशास्त्रे तृतीयोऽध्याय: ॥ ३ ॥

---

## चतुर्थोऽध्याय: ।

चाण्डालकूपभाण्डेषु योऽज्ञानात् पिवते जलम् ।
प्रायश्चित्तं कथं तस्य वर्णे वर्णे विधीयते ॥ १
चरेत् सान्तपनं विप्र: प्राजापत्यन्तु भूमिप: ।
तदर्द्धन्तु चरेद्वैश्य: पादं शूद्रस्य दापयेत् ॥ २

शुक्लोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा।
प्रमादात् स्पर्शनं गच्छेत्तत्र कुर्य्याद्विशोधनम्॥ ३
गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत्।
जपंस्त्रिरात्रमश्नुलं पञ्चगव्येन शुध्यति॥ ४
चाण्डालेन यदा स्पृष्टो विण्मूत्रे च कृते द्विजः।
प्रायश्चित्तं त्रिरात्रं स्याद्भुक्तोच्छिष्टः षडाचरेत्॥ ५
पानमैथुनसम्पर्कं तथा मूत्रपुरीषयोः।
सम्पर्कं यदि गच्छेत्तु उदक्या चान्त्यजैस्तथा॥ ६
एतैरेव यदा स्पृष्टः प्रायश्चित्तं कथम्भवेत्।
भोजने च त्रिरात्रं स्यात् पाने तु त्र्यहमेव च॥ ७
मैथुने पादकृच्छ्रं स्यात्तथा मूत्रपुरीषयोः।
दिनमेकं तथा मूत्रे पुरीषे तु दिनत्रयम्॥ ८
एकाहं तत्र निर्द्दिष्टं दन्तधावनभक्षणे॥ ९
वृक्षारूढ़े तु चाण्डाले द्विजस्तत्रैव तिष्ठति।
फलानि भक्षयेत्तस्य कथं शुद्धिं विनिर्द्दिशेत्॥ १०
ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत्।
एकरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ ११
येन केनचिदुच्छिष्टः अमेध्यं स्पृशते द्विजः।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ १२

इत्यापस्तम्बीये धर्म्मशास्त्रे चतुर्थोऽध्यायः॥ ४॥

# पञ्चमोऽध्यायः ।

चाण्डालेन यदा स्पृष्टो द्विजवर्णः कदाचन ।
अनभ्युक्ष्य पिबेत्तोयं प्रायश्चित्तं कथं भवेत् ॥ १
ब्राह्मणस्तु त्रिरात्रेण पञ्चगव्येन शुध्यति ।
क्षत्रियस्तु द्विरात्रेण पञ्चगव्येन शुध्यति ॥ २
चतुर्थस्य तु वर्णस्य प्रायश्चित्तं न वै भवेत् ।
व्रतं नास्ति तपो नास्ति होमो नैव च विद्यते ॥ ३
पञ्चगव्यं न दातव्यं तस्य मन्त्रविवर्ज्जनात् ।
स्थापयित्वा द्विजानान्तु शूद्रो दानेन शुध्यति ॥ ४
ब्राह्मणस्य यदोच्छिष्टमश्नात्यज्ञानतो द्विजः ।
अहोरात्रन्तु गायत्र्या जपं कृत्वा विशुध्यति ॥ ५
उच्छिष्टं वैश्यजातीनां भुङ्क्तेऽज्ञानाद्द्विजो यदि ।
शङ्खपुष्पीपयः पीत्वा त्रिरात्रेणैव शुध्यति ॥ ६
ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन ।
न तत्र दोषं मन्यन्ते नित्यमेव मनीषिणः ॥ ७
उच्छिष्टमितरस्त्रीणामश्नीयात् पिबतेऽपि वा ।
प्राजापत्येन शुद्धिः स्याद्भगवानङ्गिराब्रवीत् ॥ ८
अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातयः ।
चान्द्रायणं तदर्द्धार्द्धं ब्रह्मक्षत्रविशां विधिः ॥ ९
विण्मूत्रभक्षणे विप्रस्तप्तकृच्छ्रं समाचरेत् ।
श्वकाकोच्छिष्टभोगे च प्राजापत्यविधिः स्मृतः ॥ १०

उच्छिष्टः स्पृशते विप्रो यदि कश्चिदकामतः।
शुनः कुक्कुटशूद्रांश्च मद्यभाण्डं तथैव च॥ ११
पक्षिणाधिष्ठितं यच्च यदमेध्यं कदाचन।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ १२
वैश्येन च यदा स्पृष्ट उच्छिष्टेन कदाचन।
स्नानं जपश्च त्रैकाल्यं दिनस्यान्ते विशुध्यति॥ १३
विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कदाचन।
स्नात्वाचम्य विशुद्धः स्यादापस्तम्बोऽब्रवीन्मुनिः॥ १४

इत्यापस्तम्बीये धर्म्मशास्त्रे पञ्चमोऽध्यायः॥ ५॥

---

## षष्ठोऽध्यायः।

अत ऊर्द्धं प्रवक्ष्यामि नीलीवस्त्रस्य यो विधिः।
स्त्रीणां क्रीड़ार्थसम्भोगे शयनीये न दुष्यति॥ १
पालने विक्रये चैव तद्वृत्तेरुपजीवने।
पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुध्यति॥ २
स्नानं दानं तपो होमः स्वाध्यायः पितृतर्पणम्
पञ्चयज्ञा वृथा तस्य नीलीवस्त्रस्य धारणात्॥ ३
नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ ४
रोमकूपैर्यदा गच्छेद्रसो नील्यास्तु कर्हिचित्।
पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुध्यति॥ ५
नीलीदारु यदा भिन्द्याद्ब्राह्मणस्य शरीरकम्।
शोणितं दृश्यते तत्र द्विजश्चान्द्रायणं चरेत्॥ ६

नीलीमध्ये यदा गच्छेत् प्रमादाद्ब्राह्मणः क्वचित्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ ७
नीलीरक्तेन वस्त्रेण यदन्नमुपनीयते।
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत्॥ ८
भक्षयेद्यस्तु नीलीन्तु प्रमादाद्ब्राह्मणः क्वचित्।
चान्द्रायणेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः॥ ९
यावत्यां वापिता नीली तावती चाशुचिर्मही।
प्रमाणं द्वादशाब्दानि अत ऊर्द्ध्वं शुचिर्भवेत्॥ १०
इत्यापस्तम्बीये धर्म्मशास्त्रे षष्ठोऽध्यायः॥ ६

---

## सप्तमोऽध्यायः।

स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते।
वृत्ते रजसि गम्या स्त्री नानिवृत्ते कथञ्चन॥ १
रोगेण यद्रजः स्त्रीणामत्यर्थं हि प्रवर्त्तते।
अशुद्धास्तु न तेनेह तासां वैकारिकं हि तत्॥ २
साध्वाचारा न सा तावद्रजो यावत् प्रवर्त्तते।
वृत्ते रजसि साध्वी स्याद्गृहकर्म्मणि चेन्द्रिये॥ ३
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति॥ ४
अन्त्यजातिश्वपाकेन संस्पृष्टा वै रजस्वला।
अहानि तान्यतिक्रम्य प्रायश्चित्तं प्रकल्पयेत्॥ ५
त्रिरात्रमुपवासः स्यात् पञ्चगव्यं विशोधनम्।
निशां प्राप्य तु तां योनिं प्रजाकारश्च कारयेत॥ ६

रजस्वलां त्यजेत् स्पृष्टां शुना च श्वपचेन च ।
त्रिरात्रोपोषिता भूत्वा पञ्चगव्येन शुध्यति ॥ ७
प्रथमेऽहनि षड्रात्रं द्वितीये तु त्र्यहन्तथा ।
तृतीये चोपवासस्तु चतुर्थे वह्निदर्शनात् ॥ ८
विवाहे वितते यज्ञे संस्कारे च कृते तथा ।
रजस्वला भवेत् कन्या संस्कारस्तु कथम्भवेत् ॥ ९
स्नापयित्वा तदा कन्यामन्यैर्वस्त्रैरलङ्कृताम् ।
पुनः प्रत्याहुतिं हुत्वा शेषं कर्म समाचरेत् ॥ १०
रजस्वला तु संस्पृष्टा श्वकुक्कुटवायसैः ।
सा त्रिरात्रोपवासेन पञ्चगव्येन शुध्यति ॥ ११
उच्छिष्टेन तु संस्पृष्टा कदाचित् स्त्री रजस्वला ।
कृच्छ्रेण शुध्यते विप्रस्तथा दानेन शुध्यति ॥ १२
एकशाखासमारूढ़ा चाण्डाली वा रजस्वला ।
ब्राह्मणेन समं तत्र सवासाः स्नानमाचरेत् ॥ १३
रजस्वलायाः संस्पर्शः कथञ्चिज्जायते शुना ।
रजोदिनात्तु यच्छेषस्तदुपोष्य विशुध्यति ॥ १४
अशक्ता चोपवासे तु स्नानं पश्चात् समाचरेत् ।
तत्राप्यशक्ता चैकेन पञ्चगव्यं पिबेत्ततः ॥ १५
उच्छिष्टस्तु यदा विप्रः स्पृशेन्मद्यं रजस्वलाम् ।
मद्यं स्पृष्ट्वा चरेत् कृच्छ्रं तदर्द्धन्तु रजस्वलाम् ॥ १६
उदक्यां सूतिकां विप्र उच्छिष्टः स्पृशते यदि ।
कृच्छ्रार्द्धन्तु चरेद्विप्र प्रायश्चित्तं विशोधनम् ॥ १७
चाण्डालैः श्वपचैर्वापि आत्रेयी स्पृशते यदि ।
शेषाद्दात् कालकृष्टेन पञ्चगव्येन शुध्यति ॥ १८

उदक्या ब्राह्मणी शूद्रामुदक्यां स्पृशते यदि ।
अहोरात्रोषिता भूत्वा पञ्चगव्येन शुध्यति ॥ १८
एवञ्च क्षत्रियां वैश्यां ब्राह्मणी चेद्रजस्वलाम् ।
सचेलप्लवनं कृत्वा दिनस्यान्ते घृतं पिबेत् ॥ २०
स्ववर्णेषु तु नारीणां सद्यः स्नानं विधीयते ।
एवमेव विशुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः ॥ २१
इत्यापस्तम्बीये धर्मशास्त्रे सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते ।
सुराविण्मूत्रसंसृष्टं शुध्यते तापलेखनैः ॥ १
गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि तु ।
दशभिः क्षारैः शुध्यन्ति श्वकाकोपहतानि च ॥ २
शौचं सुवर्णनारीणां वायुसूर्येन्दुरश्मिभिः ॥ ३
रेतःस्पृष्टं शवस्पृष्टमाविकन्तु प्रदुष्यति ।
अद्भिर्मृदा च तन्मात्रं प्रक्षाल्य च विशुध्यति ॥ ४
शुष्कमन्नमविप्रस्य पञ्चरात्रेण जीर्य्यति ।
अन्नं व्यञ्जनसंयुक्तमर्द्धमासेन जीर्य्यति ॥ ५
पयस्तु दधि मासेन षण्मासेन घृतं तथा ।
संवत्सरेण तैलन्तु कोष्ठे जीर्य्यति वा नवा ॥ ६
भुञ्जते ये तु शूद्रान्नं मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं जायन्ते ते मृताः श्वनि ॥ ७

शूद्रान्नं शूद्रसम्पर्कः शूद्रेणैव सहासनम्।
शूद्रात् ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत्॥ ८
आहिताग्निस्तु यो विप्रः शूद्रान्नान्न निवर्त्तते।
तथा तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः॥ ९
शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति।
यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रस्य सम्भवः। १०
शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः।
स भवेच्छूकरो ग्राम्यो मृतः श्वा वाथ जायते॥ ११
ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य तु पर्व्वणि।
वैश्यस्य यज्ञदीक्षायां शूद्रस्य न कदाचन॥ १२
अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतम्।
वैश्यस्याप्यन्नमेवान्नं शूद्रस्य रुधिरं स्मृतम्॥ १३
वैश्वदेवेन होमेन देवताभ्यर्च्चनैर्ज्जपैः।
अमृतं तेन विप्रान्नमृग्यजुःसामसंस्कृतम्॥ १४
व्यवहारानुरूपेण धर्म्मेण च्छलवर्ज्जितम्।
क्षत्रियस्य पयस्तेन भूतानां यच्च पालनम्॥ १५
स्वकर्म्मणा च वृषभैरनुकूल्यात्मशक्तितः।
खलयज्ञातिथित्वेन वैश्यान्नं तेन संस्कृतम्॥ १६
अज्ञानतिमिरान्धस्य मद्यपानरतस्य च।
रुधिरं तेन शूद्रान्नं विधिमन्त्रविवर्जितम्॥ १७
आममांसं मधु घृतं धानाः क्षीरं तथैव च।
गुडं तक्रं रसं ग्राह्यं निवृत्तेनापि शूद्रतः॥ १८
शाकं मांसं मृणालानि तुम्बुरुः शक्तवस्तिलाः।
रसाः फलानि पिण्याकं प्रतिग्राह्या हि सर्व्वतः॥ १९

आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि।
मनस्तापेण शुध्येत द्रुपदां वा शतं जपेत् ॥ २०
द्रव्यपाणिस्तु शूद्रेण स्पृष्टोच्छिष्टेन कर्हिचित्।
तद्द्विजेन न भोक्तव्यमापस्तम्बोऽब्रवीन्मुनिः ॥ २१
इत्यापस्तम्बीये धर्मशास्त्रेऽष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः।

भुञ्जानस्य तु विप्रस्य कदाचित् स्रवते गुदम्।
उच्छिष्टस्याशुचेस्तस्य प्रायश्चित्तं कथं भवेत् ॥ १
पूर्वं शौचन्तु निर्वर्त्य ततः पश्चादुपस्पृशेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ २
अशित्वा सर्वमेवान्नमकृत्वा शौचमात्मनः।
मोहाद्भुक्त्वा त्रिरात्रन्तु यवान् पीत्वा विशुध्यति ॥ ३
प्रसृतं यवशस्तेन पलमेकन्तु सर्पिषा।
पलानि पञ्च गोमूत्रं नातिरिक्तावदाशयेत् ॥ ४
अलेह्यानामपेयानामभक्ष्याणाञ्च भक्षणे।
रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथम्भवेत् ॥ ५
पद्मोदुम्बरबिल्वाश्च कुशाश्वत्थपलाशकाः।
एतेषामुदकं पीत्वा षड्रात्रेण विशुध्यति ॥ ६
ये प्रत्यवसिता विप्राः प्रव्रज्याग्निजलादिषु।
अनाशकनिवृत्ताश्च गृहस्थत्वं चिकीर्षतः ॥ ७
चरेयुस्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि वा।
जातकर्मादिभिः सर्वैः पुनः संस्कारभागिनः।
तेषां सान्तपनं कृच्छ्रं चान्द्रायणमथापि वा ॥ ८

यद्देष्टितं वाऽथवलाविचित्रै
रमेध्यलिप्तञ्च भवेच्छरीरम्।
श्रोत्रे मुखे च प्रविशेच्च सम्यक्
स्नानेन लेपोपहतस्य शुद्धिः॥ ९

ऊर्ध्वं नाभेः करौ मुक्ता यदङ्गमुपहन्यते।
ऊर्ध्वं स्नानमधः शौचं मार्जनेनैव शुध्यति॥ १०
उपानहावमेध्यं वा यस्य संस्पृशते मुखम्।
मृत्तिकाशोधनं स्नानं पञ्चगव्यं विशोधनम्॥ ११
दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु।
षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु॥ १२
उपनीतं यदा त्वन्नं भोक्तारं समुपस्थितम्।
अपीतवत् समुत्सृष्टं न दद्यान्नैव होमयेत्॥ १३
अन्ने भोजनसम्पन्ने मक्षिकाकेशदूषिते।
अनन्तरं स्पृशेदापस्तच्चान्नं भस्मना स्पृशेत्॥ १४
शुष्कमांसमयञ्चान्नं शूद्रान्नं वाप्यकामतः।
भुक्ता कृच्छ्रं चरेद्विप्रो ज्ञानात् कृच्छ्रत्रयं चरेत्॥ १५
अभुक्ते मुच्यते यस्तु भुञ्जन् यत्रापि मुच्यते।
भोक्ता च भोजकश्चैव पङ्क्त्या गच्छति दुष्कृतम्॥ १६
यस्तु भुङ्क्ते तु भुक्तं वा दुष्टं वापि विशेषतः।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ १७
उदके चोदकस्थस्तु स्थलस्थश्च स्थले शुचिः।
पादौ स्थाप्योभयत्रैव आचम्योभयतः शुचिः॥ १८
उत्तीर्याचम्य उदकादवतीर्य उपस्पृशेत्।
एवं श्रेयसा युक्तो वरुणेनाभिपूज्यते॥ १९

अन्त्यागारे शवां गोष्ठे ब्राह्मणानाञ्च सन्निधौ ।
स्वाध्याये भोजने चैव पादुकानां विसर्जनम् ॥ २०
जन्मप्रभृति-संस्कारे श्मशानान्ते च भोजनम् ।
असपिण्डेन कर्त्तव्यं चूड़ाकार्य्ये विशेषतः ॥ २१
याजकान्नं नवश्राद्धं संग्रहे चैव भोजनम् ।
स्त्रीणां प्रथमगर्भे च भुक्त्वा चान्द्रायणं चरेत् ॥ २२
ब्रह्मौदने च श्राद्धे सीमन्तोन्नयने तथा ।
नवश्राद्धे मृतश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥ २३
अप्रजाता तु नारी स्यान्नाश्नीयादेव तद्गृहे ।
अथ भुञ्जीत मोहाद् यः पूयसं नरकं व्रजेत् ॥ २४
अल्पेनापि हि शुल्केन पिता कन्यां ददाति यः ।
रौरवे बहुवर्षाणि पुरीषं मूत्रमश्नुते ॥ २५
स्त्रीधनानि च ये मोहादुपजीवन्ति बान्धवाः ।
स्वर्णं यानानि वस्त्राणि ते पापा यान्त्यधोगतिम् ॥ २६
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्च्चसम् ।
असंस्कृतन्तु यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ॥ २७
कृतके सूतके चैव ग्रहणे शशिभास्करे ।
हस्तिच्छायान्तु यो भुङ्क्ते पापः स पुरुषो भवेत् ॥ २८
पुनर्भूः पुनरेता च रेतोधाः कामचारिणी ।
आसां प्रथमगर्भेषु भुक्त्वा चान्द्रायणं चरेत् ॥ २९
मातृघ्नस्य पितृघ्नस्य ब्रह्मघ्नो गुरुतल्पगः ।
विशेषाद्गतानेतेषां भुक्त्वा चान्द्रायणं चरेत् ॥ ३०
रजकव्याधशैलूषवेणुचर्म्मोपजीविनाम् ।
भुक्त्वैषां ब्राह्मणश्चान्नं शुद्धिं चान्द्रायणेन तु ॥ ३१

उच्छिष्टोच्छिष्टसंस्पृष्टं शुना शूद्रेण वा द्विजः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ ३२

ब्राह्मणस्य सदाकालं शूद्रप्रेषणकारिणः ।
भूमावन्नं प्रदातव्यं यथैव श्वा तथैव सः ॥ ३३

अनुदकेष्वरण्येषु चौरव्याघ्राकुले पथि ।
कृत्वा मूत्रं पुरीषञ्च द्रव्यहस्तः कथं शुचिः ॥ ३४

भूमावन्नं प्रतिष्ठाप्य कृत्वा शौचं यथार्हतः ।
उत्सङ्गे गृह्य पक्वान्नमुपस्पृश्य ततः शुचिः ॥ ३५

मूत्रोच्चारं द्विजः कृत्वा अकृत्वा शौचमात्मनः ।
मोहाद्भुक्त्वा त्रिरात्रन्तु गव्यं पीत्वा विशुध्यति ॥ ३६

उदक्यां यदि गच्छेत्तु ब्राह्मणो मदमोहितः ।
चान्द्रायणेन शुध्येत ब्राह्मणानाञ्च भोजनैः ॥ ३७

भुक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा ।
प्रमादाद्यदि संस्पृष्टो ब्राह्मणो ज्ञानदुर्बलः ॥ ३८

स्नात्वा त्रिषवणं नित्यं ब्रह्मचारी धराशयः ।
स त्रिरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ ३९

चण्डालेन तु संस्पृष्टो यस्त्वापः पिबति द्विजः ।
अहोरात्रोषितो भूत्वा त्रिषवणेन शुध्यति ॥ ४०

सायं प्रातस्त्वहोरात्रं पादं कृच्छ्रस्य तं विदुः ।
सायं प्रातस्तथैवैकं दिनद्वयमयाचितम् ॥ ४१

दिनद्वयञ्च नाश्नीयात् कृच्छ्रार्द्धं तद्विधीयते ।
प्रायश्चित्तं लघु ह्येतत्पापेषु तु यथार्हतः ॥ ४२

लाक्षाजिनतिलग्राही हव्यग्रानाञ्च विक्रयी ।
कृतनिर्यातकश्चैव न भूयः पुरुषो भवेत् ॥ ४३

इत्यापस्तम्बीये धर्म्मशास्त्रे नवमोऽध्यायः ॥ ९

---

## दशमोऽध्यायः ।

आचान्तोऽप्यशुचिस्तावद्यावन्नोद्रियते जलम् ।
उद्धृतेऽप्यशुचिस्तावद्यावद्भूमिर्न लिप्यते ॥ १

भूमावपि च लिप्तायां तावत् स्यादशुचिः पुमान् ।
आसनादुत्थितस्तस्माद् यावन्नाक्रमते महीम् ॥ २

न यमं यममित्याहुरात्मा वै यम उच्यते ।
आत्मा संयमितो येन तं यमः किं करिष्यति ॥ ३

न तथासिस्तथा तीक्ष्णः सर्पो वा दुरधिष्ठितः ।
यथा क्रोधो हि जन्तूनां शरीरस्थो विनाशकः ॥ ४

क्षमा गुणो हि जन्तूनामिहामुत्र सुखप्रदः ।
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ५

न शास्त्रशास्त्राभिरतस्य मोक्षो
न चैव रम्यावसथप्रियस्य ।
न भोजनाच्छादनतत्परस्य
एकान्तशीलस्य दृढव्रतस्य ॥ ६

मोक्षो भवेत् प्रीतिनिवर्त्तकस्य
अध्यात्मयोगैकरतस्य सम्यक् ।

मौनी भवेन्नित्यमहिंसकश्च
स्वाध्याययोगागतमानसश्च ॥ ७

क्रोधयुक्तो यद्‌यजते यज्जुहोति यदर्चति।
सर्व्वं हरति तत् तस्य आमकुम्भ इवोदकम् ॥ ८

अपमानात्तपोवृद्धिः सम्मानात्तपसः क्षयः।
अर्चितः पूजितो विप्रो दुग्धा गौरिव सीदति ॥ ९

आप्यायते यथा धेनुस्तृणैरमृतसम्भवैः।
एवं जपैश्च होमैश्च पुनरेवाप्यायते द्विजः ॥ १०

मातृवत् परदारांश्च परद्रव्याणि लोष्ट्रवत्।
आत्मवत् सर्व्वभूतानि यः पश्यति स पश्यति ॥ ११

रजकव्याधशैलूषवेणुचर्म्मोपजीविनाम्।
यो भुङ्क्ते भक्तमेतेषां प्राजापत्यं विशोधनम् ॥ १२

अगम्यागमनं कृत्वा अभक्ष्यस्य च भक्षणम्।
शुद्धिं चान्द्रायणं कृत्वा अथर्वोक्तं यथैव च ॥ १३

अग्निहोत्रं त्यजेद्यस्तु स नरो वीरहा भवेत्।
तस्य शुद्धिर्विधातव्या नान्या चान्द्रायणादृते ॥ १४

विवाहोत्सवयज्ञेषु अन्तरामृतसूतके।
सद्यः शुद्धिं विजानीयात् पूर्व्वं सङ्कल्पितं चरेत् ॥ १५

देवद्रोण्यां विवाहेषु यज्ञेषु प्रततेषु च।
कल्पितं सिद्धमन्नाद्यं नाशौचं मृतसूतके ॥ १६

इत्यापस्तम्बीये धर्म्मशास्त्रे दशमोऽध्यायः ॥ १० ॥

